



VENKATASURI'S

# NAUKA CHARITRAM

IN SANSKRIT



**SAURASHTRA SABHA**

MUSEUM & SAHITYA PARISHAD

MADURA

1947

अडैयार् पुस्तकालयाध्यक्षाणां श्रीश्रीनिवासमूर्तिमहाशयानां मनो रमतामस्मिन् ग्रन्थे इति प्रार्थ्यते सुहृदा राजगोपालेन

॥ श्रीः ॥

श्रीमत्कविवेङ्कटसूरिविरचितम्

# नौकाचरित्रम्

नाम काव्यम्

---

अडैयार् सङ्गीतशिरोमणिकलाशालाशास्त्रोपन्यासकेन

**राजगोपालार्येण**

संशोध्य संपादितम्

---

मद्रसर्वकलाशालासङ्गीतविभागाध्यक्षाणां

**साम्बमूर्त्यार्याचार्यवर्याणां**

उपोद्घातेन समुद्भासितम्



मधुरानगरीस्थ "सौराष्ट्रसभया"

सर्वजिन्नामसंवत्सरे मेषे मासि

प्रकाशितम् ॥

உ

ஸ்ரீமத் கவி வேங்கடஸூரி அவர்களால் இயற்றப்பட்ட

# “நௌகா சரித்திரம்”

என்னும் காவ்யம்.



அடையாறு ஸங்கீதசிரோமணி கலாசாலை
சாஸ்த்ரோபந்யாஸகரான
ஸ்ரீமான் P. K. இராஜகோபால ஐயர்
அவர்களால் நன்கு பரிசோதிக்கப்பெற்றது.



சென்னைப் பல்கலைக்கழகத்தின் ஸங்கீதப்பகுதியின்
தலைவரான பேராசிரியர்
ப்ரம்மஸ்ரீ P. ஸாம்பமூர்த்தி ஐயர்
அவர்களுடைய முன்னுரையுடன்



மதுரை ஸௌராஷ்ட்ர ஸபையாரால்
வெளியிடப்பட்டது.



ஸௌராஷ்ட்ர விஜயாப்தம் 635.
1947

 [ விலை அணா 12.

TYAGARAJA'S

# TELUGU OPERA

# "NAUKA CHARITRAM"

**Text in Telugu, songs in notation, in Tamil, and Tamil translation.**

**Edited & Published**

BY

PROF. P. SAMBAMOORTHY, B.A., B.L.,

*Head of the Dept. of Indian Music*

*University of Madras.*





## The Saurashtra Sabha.

Hereby acknowledges its indebtedness to SRIM P. N. K. SUBBARAMA IYER, who has been gracious enou to bear the expenses of bringing out this publication.

# FOREWORD

The Saurashtra Sabha, Madura, deserves to be congratulated on having launched upon a programme of publications of select manuscripts on music in their library. Ever since I perused their valuable collection, I have been impressing upon them the necessity of publishing them. The Walajapet collection includes manuscripts on avariety of topics. Those pertaining to music are especially valuable and interesting. They include not only unpublished musical compositions in notation but also unpublished works on Musicology.

It is a happy augury that the first work to be published is the "**Nauka Charitram**" in Sanskrit verse by Kavi Venkata Suri. The original "Nauka Charitram" is a beautiful opera in Telugu and is one of the grand creations of Tyagaraja. Deriving inspiration from this work, Kavi Venkata Suri has given us an admirable poem. His charming and racy style, his poetic gifts and imagery and his capacity for vivid and colourful portrayal of incidents are all patent in this work. Venkata Suri was a desciple of Walajapet Venkataramana Bhagavatar and his name is already familior to research scholars as the person who preserved for us the horoscope of the great composer, Tyagaraja.

The present work will be of interest to musicians and Sanskrit scholars alike.

I hope the Saurashtra Sabha will follow up this publication, with publications of further manuscripts on music with them.

6th May 1947

P. SAMBAMOORTHY,
Head of the Department of
Indian Music
*University of Madras.*

Printed at the SREEVATHSA PRESS, Royapettah, Madras 14.
Published by The Saurashtra Sabha, Madura,
Q.H.M.S. No. 299 Copies 500. 12-5-'47.

॥ श्रीः ॥

## ॥ प्रस्तावना ॥



त्रिपुरहरनुतं तं भिन्नदन्तं धरन्तं
वरवितरणदक्षं दक्षपुत्रीसुपुत्रम् ।
दहरगगनभाजं विघ्नराजं स्वराजं
भवजलनिधिनावं भक्तिसिद्ध्यै भजेऽहम् ॥

जयतु जयतु धीमान् वेङ्कटाख्यश्च सूरिः
भुवि विहरतु काव्यं तस्य नौकाचरित्रम् ।
विभुनरहरिदेवप्रीतिपात्रं मनोज्ञं
सरसमधुरकाव्यं रस्यतां भावविद्भिः ॥

इह खलु धर्मार्थकाममोक्षाणर्थिषु मोक्षार्थिनामेव परमपुरुषार्थित्वं प्रतिपादितं काले कालेऽवतीर्णैः परमाचार्यैश्शङ्करभगवत्पूज्यपादादिभिः । साधनान्यप्युपदिष्टानि तस्य श्रद्दधानानां सुलभसाध्यानि । तेषु साधनेष्वतिसुलभमचिरादेव फलसाधयितृत्वादत्युत्कृष्टा मता परमात्मभक्तिः । स च परमात्मा निजभक्तमनोऽभीष्टं पूरयितुकामस्तस्येष्टरूपं दधानस्तद्धृदि विहरति । रूपारूपयोगिहृद्दहराकाशविराजमानतेजःपुञ्जस्वरूपी मनोहर-

स्तथा विहरमाणस्सदा मोदं जनयति । तथाप्यदृढधियां केषामपि ब्रह्म-जिज्ञासूनां मोदानुभवभ्रमविकारी मदोऽप्यकस्माज्जायेत ॥

बहुविचित्रे कृष्णचरित्रे दृश्यन्तामस्य सन्दर्भस्यासंख्यानि हस्तामलकहृदयङ्गमान्युदाहरणानि । भगवान् श्रीवासुदेवः पुनरावृत्ति-रहितमहायोगिहृदयाभिर्गोपिकाभिरावृतस्तासां तद्विधानन्दास्वादोद्भवमो-दमदमोहनिवारणलक्ष्यो यमुनाम्भस्सु ताभिस्सह सलीलं नौकाविहार-कौतुकव्याजेनाव्याजकरुणार्द्रहृदयः—

**“सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ॥”**

इति गीतोपपादितस्वोपदेशरहस्यं सन्दर्भनिरूपणेन प्रत्यक्षप्रमाणीचकार ॥

स चेश्वरभक्तानां रुचिरो विषयो गान्धर्वरसभावादिकुसुमप्रफुल्लक-विताकमलिनीविहारिमोनेन वाग्गेयकारराजेन त्यागराजेनान्ध्रभाषायां **“नौकाचरित्राख्ये”** गेयनाटकप्रेक्षणके सन्दृब्ध इति रसिकलोक-प्रसिद्धम् । तच्च नाटकं मद्रपुरीसर्वकलाशालासङ्गीतविभागाध्यक्षपीठाभर-णायमानैर्गान्धर्वकलाशास्त्रपारङ्गतैर्ब्रह्मश्री**साम्बमूर्त्यार्या**चार्यवर्यैरष्टा-भ्यो वर्षेभ्यः पुरा संशोध्य सस्वरनिबद्धकीर्तनं सद्राविडतात्पर्यं सराग-लक्षणविवरणं सम्यक्परिष्कृत्य संपादितं तैरेव प्रकाशितं विद्वद्गणसुविदित-मस्ति ॥

सैषा कृष्णगोपिकानौकाविहारवस्तुका गोपालशृङ्गारलीलारहस्यरस-नपरिपाका कमनीया कथा ललितपदरचिते कस्मिन्नपि मनोहरे संस्कृतकाव्ये

शब्दचित्रार्थवाच्यचित्रादिसर्वालङ्कारभूषिते चित्रितासीत् केनापि महात्मना **श्रीमत्कविवेङ्कटसूरिनाम्ना** । एष कविश्श्रोलेष्वयम्पेट्टाप्रान्तस्थरामचन्द्रपुराख्यग्रामे सौराष्ट्रदेशस्थविप्रकुले पवित्रीकृतमतङ्गर्षिगोत्रस्य यजुश्शाखाध्यायिनो महाविदुषश्श्रीनारायणशर्मणस्तस्य सहधर्मिण्याश्श्रीमत्या रङ्गनायक्याश्च तपःफलरूपोऽवतीर्णो महात्मा । समस्तविद्यासंपूर्णोऽयं **श्रीमद्भूपतीर्थार्यमा**चार्यवर्यं महान्तं यतीन्द्रमाश्रित्य बहुशुश्रूषस्तोषितोपदेष्टृमानसस्तन्मुखाद्गृहीतवान् ब्रह्मविद्योपदेशसर्वस्वं ब्रह्मरन्ध्रसरसीरुहोदरनित्यलग्नब्रह्मज्ञानदेशिकानुग्रहसंपूर्णः । स च सकलहृदाह्लादप्रह्लादयोगीश्वरवरप्रदलक्ष्मीनृसिंहचरणकमलध्यानशीलः—

> **“ एकैव शक्तिः परमेश्वरस्य**
> **भिन्ना चतुर्धा विनियोगकाले ।**
> **भोगे भवानी पुरुषे च विष्णुः**
> **कोपे च काली समरे च दुर्गा ॥ ”**

इत्यागमिकोपदेशात् प्रपञ्चाकारव्युत्पत्तिपरिच्छेदविनाशनलक्ष्यायाः करुणासिन्धोर्दक्षिणकालिकायाः प्रपन्नपराधीनतां प्रकटीकुरुते स । निग्रहानुग्रहादिकं खलु सर्वं पारमात्मिकसूक्ष्मशक्तेः कारणकार्यकलनास्वाभाविकं दृष्टान्तमनुभवसिद्धं जपयाजिनाम् ॥

तथैव चाह गुहानुभूतिपरमानन्दरसास्वादो महानरुणगिरिनाथपरमहंसः—

" தரணியி லரணிய முரணிர-
ணியனுடல் தனைநக நுதிகொடு
சாடோங்கு நெடுங்கிரி
யோடேந்து பயங்கரி."

(தேவேந்திர சங்க வகுப்பு

उक्तञ्च कालिकाक्रमस्तोत्रे—

**" पुनस्तथा कूर्चयुगं जपन्ति**
**भवन्ति सिद्धा नरसिंहरूपाः ॥ "**

ब्रह्मध्यानयोगधारणासमाधिपरस्य तस्य हृदये लक्ष्म्या सह सानन्दं विहरन् भगवान्नृसिंहः प्रशस्तवाग्विभवमतिविपुलमतिं निजपद-कमलयुगपूजानिर्भरासक्तिश्च दत्तवान् मुदा परया तस्मा अनुग्रहार्हवरि-ष्ठाय। किन्न सिध्येद्वरगुरौ हरौ प्रसन्ने! वरकविश्चायं गान्धर्वोद्धारणा-वताराणां त्यागराजयतीन्द्राणां शिष्यधुरीणस्य श्रीमद्वेङ्कटरमणभागवतस्या-न्तेवासी सन् गान्धर्वञ्चाधीतवान्। भावरागतालसुमहत्तराणि चास्य कीर्तनानि रञ्जयन्ति रसिकान्॥

अस्य महापुरुषस्य चरितसम्बन्धीनि विषयान्तराणि " सौराष्ट्र-विप्रबन्धु"रिति बिरुदभाजा कु. वे. पद्मनाभार्येण द्राविडभाषायां विरचिते सौराष्ट्रसभाप्रकाशिते " श्रीमत्कविवेङ्कटसूरिस्वामिचरित्रं " इत्याख्ये पुस्तके द्रष्टव्यानि जिज्ञासुभिः। बिरुदेन सौराष्ट्रविप्रबन्धुरपि वस्तुत-स्सर्वविप्रबन्धुर्ज्ञाता वक्ता कविहृदयो दानशीलो दयात्मा सत्यवाग्धार्मिकश्च

महान् परोपकारी दृश्यतेऽसौ । "भगवद्गीतासारः" इत्याख्ये द्राविड-पुस्तकान्तरे गद्यात्मिके संक्षेपेण विषयसारमात्रसङ्ग्रहविवरणेनासौ स्वप्रति-भया ब्रह्मजिज्ञासूनुपनयति कृष्णोपदिष्टब्रह्मज्ञानं प्रति । "सत्सङ्गत्वे निस्सङ्गत्वं" इत्यादिगीतवन्तो महान्तो भगवत्पूज्यपादाश्शङ्कराचार्य-वर्यास्सत्सङ्गादारभ्य सोपानक्रमेण जीवन्मुक्त्यन्तमुपदिष्टवन्तस्संसृतिमोक्ष-सुलभमार्गम् । एतावन्तो महनीयगुणवन्तो विप्रबन्धुपद्मनाभार्यसदृशा लोके विहरन्ति सर्वदा सत्सङ्गार्हप्रत्यक्षोदाहरणभूताः ॥

किं च सद्गुरुश्रीत्यागराजतच्छात्रवर्गस्वहस्तलिखितपुस्तकादीनि पोतनभागवतादिकाव्यकीर्तनचरित्रगान्धर्वलक्षणग्रन्थमन्त्रतन्त्रज्योतिषशा--स्त्रेत्यादिबृंहितानि विविधानि ग्रन्थरत्नान्यनर्घानि श्रीमद्वेङ्कटरमणभागत-वंशोद्भववशस्थानि कतिपयेभ्यो वर्षेभ्यः पुरा स्वीकृतानि मधुरानगरीस्थया सौराष्ट्रसभाख्यया साहित्यपरिषदा । लोकोपकारार्थं वशीकृते ग्रन्थसमुच्चये तस्मिन्नान्ध्रलिपिलिखितं दृष्टमिदं "**नौकाचरित्रं**" नाम काव्यं **श्रीमत्कविवेङ्कटसूरि**विरचितम् ॥

एतद्ग्रन्थप्रकाशनविषये बहुशश्चोपकृतवतस्सौराष्ट्रसभानिर्वाहकस्य श्रीमतः पी. एस्. ए. कृष्णार्यस्य साहित्योद्धारणपोषणविषयदत्तान्तरङ्गस्य परोपकारचिन्तामणेस्साहाय्यं न विस्मार्यम् ॥

कवितारसनशीलसद्भक्तमानुषमानसानन्दनलक्ष्येण मया सपरि-श्रमं सश्रद्धं संपादितमिदं सहृदयहृदयानन्दनं काव्यरत्नं सादरं सानन्द-

मनुभूयतां रसिकलोकमान्यैर्विद्वद्भिः। हंसक्षीरन्यायेन गुणग्राहिणस्ते मया समर्पितमिदं ग्रन्थरत्नं मत्सरमपहायाङ्गीकृत्य मां कृतार्थं कुर्युः। तथा हि—

> “ **पुराणमित्येव न साधु सर्वं**
> **न चापि काव्यं नवमित्यवद्यम्।**
> **सन्तः परीक्ष्यान्यतरद्भजन्ते**
> **मूढः परप्रत्ययनेयबुद्धिः॥** ”

इति वितर्कमुक्तवान् **मालविकाग्निमित्रे** महाकविश्रेणीपतिः कवित्वामृतनदीनदीनो महात्मा श्रीमत्कालिदासः करुणार्द्रापाङ्गदक्षिण-कालिकाकटाक्षवीक्षणपात्रभूतो निर्भरभक्तिमतां वरिष्ठः। काव्यरत्नमेतच्चा-चन्द्रार्कं निखिलरसिकजनजातानन्दवर्धनं सहृदयविद्वन्मण्डले सञ्जेजीया-द्रङ्गरङ्गमित्यखिलभुवनभर्तारं लक्ष्मीनृसिंहं प्रार्थयेऽहम्॥

इति शम्॥

मद्रपुरी।
ःसर्वजिच्चित्रापूर्णिमा॥ } **पै. कृ. राजगोपालः॥**

# PUBLISHER'S NOTE.

It was a full moon. Lord Sri Krishna was in a boat on Yamuna. Gopis were with him. Conscious of the Lord's special favours, they were in an egoistic mood. The Lord, in His supreme mercy, wanted to correct them. "Nowka Charitra" describes how He did it.

"Nowka Chitra" was orginally composed by Sri Thyaga Brahmam in Telugu. Later, it was rendered in the Sourashtra language by Budda Alagar Arya of Salem. Maha. kavi Venkatasuri has rendered it in Sanskrit in an exquisite way.

It is said that Sri Venkatasuri's production elicited the admiration of Sri Thyaga Brahmam himself. No wonder, then, that it is regarded by Sanskrit Scholars as an inspiring intellectual treat of a very high order.

On behalf of my Committee, I tender my most greatful thanks to Sri P. Sambamurthi, Head of the Department of Indian Music, University of Madras, for his very impressive foreword, to Sri P. K. Rajagopal Ayyar of Sangeetha Siromani Kalasala of Adyar, for all the trouble that he took to go through the original and in getting it printed as much as for his beautiful preface and to Sri P. N. K. Subburama Ayyar, of Madura for the financial help rendered by him in bringing out this publication.

MADURA,
16—5—47.

**P. S. A. Krishnier,**
*Convener & Correspondent,*
The Musuem & Sahitya Committee,
SOURASHTRA SABHA.

ॐ

॥ श्रीरामः प्रसन्नः ॥

# अथ श्रीमत्कविवेङ्कटसूरिणः कृतौ नौकाचरित्रे

## प्रथमस्सर्गः



श्रियं नः श्रीगौरीवदनवनजार्को वितरतु
श्रितानां सन्तानो द्विरदवदनोऽप्येकरदनः ।
प्रभूतप्रत्यूहाचलदलनदम्भोलिरनघः
प्रभातप्रोन्मीलन्नलिनमदहुङ्कारिचरणः ॥ १ ॥

तथा मे माधुर्यं किर वचसि वागीशदयिते
दयापूर्णापाङ्गे श्रितजननि देवा दिवि यथा ।
भवेयुर्माधुर्यं निमिषमनुभूयेदमतुलं
कणादेवास्याजन्यमृतमिति निर्धारितधियः ॥ २ ॥

यतो जन्मस्थेमप्रलयवदिदं दृश्यमखिलम्
यमाहुर्नीरूपं निगमनिपुणा निर्गुणमपि ।
भजन्ते सम्मोदं मनसि यमलं वीक्ष्य यमिनः
स मे कल्याणाय प्रभवतु भवाम्भोधितरणिः ॥ ३ ॥

त्यक्त्वा सन्देहकोटिं भयलवमभजन् लीलया सानुरागं
वाचातीतं विजेतुं हरिमहमिह मद्वाग्विसर्गैर्यतिष्ये ।
मद्गोपीभिर्जनन्याप्यतिरभसमसौ यन्त्रितस्सप्रमोदं
सामर्षं विश्वमूर्तिः श्रितकृतकरुणो न्यामतो दामतश्च ॥ ४

याचे स्तुवन् कविवरान् रचयेऽहमद्य
नौकाविहारचरितं नृहरेः पवित्रम् ।
न्यूनातिरिक्तमिह यद्यपि तत्समस्तं
क्षन्तव्यमेव ननु तैः करुणार्द्रभावैः ॥ ५ ॥

भूभारोत्तारणाय प्रथितयदुकुले देवकीगर्भसिन्धौ
जातो यातो यशोदाप्रियतनुभवतां ह्लादयन् गोपकन्याः ।
ब्रह्मेशानामरेन्द्रप्रभृतिसुरवरैस्सादरप्रेक्षणीयां
नौकाक्रीडां वितेने हरिरहह सह स्त्रीभिराभिस्सहेलम् ॥ ६

श्रुत्वा तस्य मुहुर्मुहुर्मुररिपोश्चारित्रमत्यद्भुतं
स्मृत्वा तच्च पुनः पुनः श्रुतिसुखं तस्यैव चिद्रूपिणः ।
तत्राभीरवधूजनैश्चिरधृतं स्वात्मीयगेहादिकं
ब्रह्मज्ञैर्निरहंममैरिव परं सर्वं ह्यहो विस्मृतम् ॥ ७ ॥

नूनं स्वतन्त्र इति नाम हरेः प्रसिद्धं
यत्तत्स्वभक्तपरतन्त्र इतीह जातम् ।

प्रागेव यद्व्रजवधूहृदयं विदित्वा
नौकाविहारकुतुकी स बभूव कृष्णः ॥ ८ ॥

मुररिपुरथ वेणुं स्वस्य विन्यस्य चौष्ठे
निजमुखमरुतासौ पूरयन् सप्रमोदम् ।
सकलनरमृगादीन् मोहयन् सुस्वरं हा
सरिगमपधनीति स्वैरमुद्गायति स्म ॥ ९ ॥

अधरनिहितवेणोस्तस्य हस्ताग्रशाखा-
क्रमपिहितविमुक्तच्छिद्ररुद्धोत्थिताभिः ।
मधुररवसुधाभिर्निर्वृतं तत्र सर्वं
हरिविरहविहस्तस्त्रीसहस्रं विहाय ॥ १० ॥

हृष्यत्सु तत्र सकलेषु चराचरेषु
खेदं ययुर्युवतयस्त्विति यत्तदेतत् ।
तस्याधरं मधुरिपोर्मधुरं विलज्जा
कान्येयमद्य मुरली पिबतीति नूनम् ॥ ११ ॥

तद्वेणुगानामृतपानमत्ता
विद्धा मुहुस्तद्विरहाङ्कुशेन ।
वीथीस्तमन्वेष्टुमुपागमंस्ताः
विष्वग्गवाक्षान् विकिरन्त्य एव ॥ १२ ॥

वीथीं ययौ सोऽपि मुदा तदानीं
फलानि कामं स्पृहयन्निवाशु ।

मुक्ताफलान्यञ्जलिना गृहीत्वा
प्रसारितापाङ्गतरङ्ग एव ॥ १३ ॥

चलद्भिरलकैरथ क्षणवियोगसंयोगभृत्
मुखं ददृशुरग्रतो मुरहरस्य गोपाङ्गनाः ।
यथा दिवि शरद्धनैर्द्रुतविमुक्तसञ्छादितं
तुषारकरमण्डलं तृषितसच्चकोराङ्गनाः ॥ १४ ॥

दृष्ट्वा नवं नवमिवागतमच्युतं तं
हृष्टाः परं सपदि तत्र समेत्य सर्वाः ।
एह्येहि मे भज भुजान्तरमित्यनेन
साकं ययुर्युवतयोऽन्यविहारदेशान् ॥ १५ ॥

हसन्तो सत्येका चलितपृथुवक्षोजयुगलं
सुमं विन्यस्यन्तो शिरसि सशिरःकम्पमपरा ।
समीकुर्वन्त्यन्या निजकरनखैस्स्वैरमलकान्
वहन्तीं संवेष्ट्य प्रययुरभितः कृष्णमबलाः ॥ १६ ॥

काचिच्चुम्बति काचिदाह्वयति तं काचिन्मुहुः प्रेक्षते
काचित्तर्जयति भ्रुवा समदनं काचित्समालिङ्गति ।
काचिद्दर्शयति स्तनौ स्वहृदयं व्याख्याति काचिद्दृशा
वीटीं काचिदुपाहरत्यथ हरेर्भाग्यं ह्यहो योषिताम् ॥ १७

मामेवैष्यति मत्प्रियो मयि रतो मामीक्षते मत्प्रभुः
मानाथो मदनस्स्वयं मम गुरुर्मत्पूर्वपुण्योदयः ।
मत्प्राणा मम भूषणं मम धनं नाथोऽनुरूपो ममे-
त्यानन्दातिशयेन तत्र नृहरिं गोप्योऽन्वगच्छंस्तदा ॥ १८ ॥

इति प्रनृत्यन् प्रहसन् प्रगायन्
आनन्दसिन्धौ सुभृशं निमज्जन् ।
नयन्नयोत्त्यैव हरिं तदासौ
स्त्रीणां समाजो यमुनामगच्छत् ॥ १९ ॥

अत्राक्रोडन्मरालीततधुतगरुदुद्धूतवातावधूत-
व्याकोचाज्जातजातोत्पतितमधुकरीव्रातसङ्गीतविद्याम् ।
संश्लाघन्ते शिरोभिस्तटतरुनिवहाः पश्यता गच्छतेति
प्रत्युद्गम्य प्रणाता इव मृदुमरुता तास्स्त्रियस्तामपश्यन् ॥२०॥

द्रुतं हंसभ्रान्त्या व्रजति वरटा सैकतमहो
मुहुः पद्मावल्यां स्मरति मधुपालिस्स्वसुकृतम् ।
जलच्छाया साम्यं भजति हरिनीलस्य महसां
तरङ्गालिर्यस्यास्स्पृशति मणिसोपानमसकृत् ॥ २१ ॥

प्राप्य तामद्भुतां रम्यां
कालिन्दीं काममोहिताः ।

कामिन्यः कामुकं दृष्ट्वा
कृष्णमन्योन्यमब्रुवन् ॥ २२ ॥

कुञ्जभ्रमद्भ्रमरझङ्कृतिटङ्कृतीभिः
दृप्यन् लतागुणसुयोजितपुष्पबाणैः ।
प्रादुर्बभूव पिकनिस्वनवीरवादैः
मारो मृदुश्वसनसारथिरद्य कष्टम् ॥ २३ ॥

मिहिरदुहितुरासां पश्यतीनां (?) विनोदं
पयसि रचितनौका द्वपथे काप्यथाभूत् ।
शमयितुमरिवर्गं संश्रितानां हरौ द्राक्
व्रजति निमिषशून्या शेषशय्येव सिन्धौ ॥ २४ ॥

राकाचन्द्रसमश्रीकां
नौकां तां प्रेक्ष्य तज्जले ।
हर्षचिन्तासमायुक्ताः
कान्ता ऊचुरिदं मिथः ॥ २५ ॥

शक्यं विहर्तुमधिरुह्य सुखेन नीरे
नीले यमस्वसुरियं तरणिस्तु हृद्या ।
मुग्धाः कथं मुररिपुर्नयतुं (?) सहाद्य
बालो नृपालतनयो मणिभूषणोऽयम् ॥ २६ ॥

नीरे शौरिमियुक्तमद्य नयतुं (?) हा किं सुखं तं विना
किं वा वक्ष्यति नो रुषाऽस्य जननी को वात्र निर्वाहकः ।
दुर्वादो भुवि दुर्जयोऽजनि यदि क्रीडान्यथास्यान्न किं
हा कष्टं हि वशेन तिष्ठति हरिर्नेयः कथं वा द्रुतम् ॥२७॥

इत्यालोच्य नभः प्रेक्ष्य
रविरस्तं भजेदिति ।
गमने त्वरमाणास्ता
नौकामभिययुस्स्त्रियः ॥ २८ ॥

विनात्मानं यियासूनां
अनाहूतस्तदा हरिः ।
तासां व्यवसितं बुद्ध्वा
प्रोवाच तदिदं वचः ॥ २९ ॥

गोप्यः कं पुरुषं विना क्वचिदपि स्त्रीणां श्रुतं साहसं
न स्थेयं तरुणीजनस्य विहृतौ केनापि यूना हरे ।
हा किं ब्रूत बलाद्रसो न हि सुखं स्वप्नेऽपि तस्य क्वचित्
नैवं नः परयोषितस्तव वचो युक्तं विनोदेन वा ॥ ३० ॥

युक्तं वोऽभिहितं मया युवतयः क्षेमाय नैवान्यथा
शक्तिस्तेऽद्य किशोरनूलतरणेस्स्याद्वा न वा चालने ।

हा गोप्यो बत मद्विना तृणमपि क्षोण्यां चलेद्वा क्व वा
सत्यं यद्यपि चिन्तनीयमबला ह्याजानतो भीरवः ॥ ३१ ॥

नेताहमस्मि निखिलेन गवामिहैकः
स प्राणिनामिव हरिर्न विदुर्भवत्यः ।
न त्वं किशोर इति विश्वसनीयभावः
प्रख्यातमेतदयि किं न विदुस्स्त्रियोऽमूः ॥ ३२ ॥

इति प्रयुक्तिभिस्तासां
प्रत्याख्यातोऽपि सादरम् ।
प्रत्ययार्थमिदं भूयो
जगाद वचनं हरिः ॥ ३३ ॥

सत्यं मद्वचनं न पथ्यमिह वः क्रीडा जले सर्वथा
नावा वापि भवेद्विना यदि मया सिन्धूदसञ्चारिणा ।
नित्यं स्यादयशो भुवीदृशमहो कृत्यं वधूभिः कथं
मा कार्यं ननु बोधना बलमिदं हा कस्य न ज्ञायते ॥३४॥

श्रुत्वा वचस्सपदि तस्य हरेस्तदेतत्
मत्वापि तथ्यमिति सर्वमहो विमुग्धाः ।
ध्यात्वा क्षणं चरितमस्य पुरानुभूतं
स्मृत्वा पुनर्वचनमीदृशमब्रुवंस्ताः ॥ ३५ ॥

मज्जन्तीनां रहसि वयसि स्वैरमर्कस्य पुत्र्याः
रन्ध्रान्वेषिन्न किमपहृतान्यंशुकानि त्वया नः ।
हा विन्यस्यन् तिलकमलिके त्वं पुरा सादरं मे
दुर्ज्ञेयात्मन्नधरमदशः किं न तद्विस्मृतं वा ॥ ३६ ॥

कियदिह नवनीतं भुक्तमित्येव पृष्ट-
स्त्वयदिति मम बाह्वोरन्तरं नास्पृशः किम् ।
स्मर नवनवनीतं भुक्तशेषं निधाय
क्व मयि शरबिडालः प्रेषितो निद्रितायाम् ॥ ३७ ॥

आस्ये विलिप्य गतवान्न किमङ्ग मे त्वं
भुञ्जान एव नवनीतमहो तदास्ताम् ।
नूनार्तवेऽव्रजसतीति सहैव सुप्त्वा
हा मे रहः किमकरोस्स्मर वञ्चक त्वम् ॥ ३८ ॥

चोरश्चिरादिह गृहीत इति स्ववेश्म-
न्याधाय सम्यगररं स्थिरमेव बद्ध्वा ।
गत्वा रयेण जननीसविधेऽपि सन्तं
त्वां वीक्ष्य किं किमयि न स्मृतमङ्गनाभिः ॥ ३९ ॥

त्वद्वेणुगानकलया न वशीकृतः किं
यज्ञे पुरा स्मर स यज्विवधूजनोऽपि ।

पौरैः पुरन्दरबलिं विरचय्य तुभ्यं
वर्षे महत्यपि चिरं वद न स्थितं वा ॥ ४० ॥

सत्यं मयोक्तमिति यद्वदसोह नस्त्वं
जानीमहे तदखिलं नयतुं (?) किल त्वाम् ।
हा तेषु तेष्ववसरेष्वयि यद्यदुक्तं
तत्तन्न तथ्यमिति वा कुटिलं न तद्वा ॥ ४१ ॥

इति तासां हरिर्वाक्यै-
रर्दितस्स पुनः पुनः ।
पुष्पवृष्टिसमस्पर्शै-
रिदं वचनमब्रवीत् ॥ ४२ ॥

अप्रस्तुतैः किमु वचोभिरिहोपयुक्तं
मामेव संश्रितवतां किमु दुस्तरं स्यात् ।
मन्नाममात्रमवलम्ब्य तरन्ति लोकाः
संसारसागरमपीदृशसिन्धुरास्ताम् ॥ ४३ ॥

मग्नोऽम्बुधावपि मया न किमुद्धृतोऽद्रिः
ग्राहो गजेन्द्रमुपरुध्य न किं निकृत्तः ।
सोमश्च किं न निहतो निगमापहारी
काकोदरोऽपि किमितो न विवासितोऽभूत् ॥ ४४ ॥

पुत्रं निमीलितमहो पुनरेव भेजे
सान्दीपनिस्तदपि किं न ममैव यत्नात् ।
मद्बाहुशौर्यमविकुण्ठितमप्रतर्क्यं
सत्यं ब्रवीमि तदलं हृदि संशयैर्वः ॥ ४५ ॥

इति तद्वचनं श्रुत्वा
क्षणमालोच्य तास्स्त्रियः ।
सत्यमेवेति निश्चित्य
तुष्टुवुर्मनसा हरिम् ॥ ४६ ॥

इति श्रीमत्कविवेङ्कटसूरिणः कृतौ

**नौकाचरित्रे**

प्रथमस्सर्गः ॥

---

॥ श्रीः ॥

# अथ श्रीमत्कविवेङ्कटसूरिणः कृतौ नौकाचरित्रे

## द्वितीयस्सर्गः

ततोऽतिधैर्यमालम्ब्य
सहसा स वधूजनः ।
सन्ननाह तदा नौका-
मारोढुं सह शौरिणा ॥ १ ॥

अथ दिवमुपसर्पत्स्वप्रभा भास्वतेव
ह्यहमहमिकया तां नावमारोहतीस्ताः ।
सरभसमनुयातं शौरिणा प्रेक्षितुं तत्
नभसि च समवेतं स्वर्वधूभिः क्षणेन ॥ २ ॥

नीवीं सम्बध्य गाढं द्रुतगतिशिथिलं द्राक्समीकृत्य गात्रे
विन्यासं भूषणानां स्मितरुचिलहरीविस्फुरत्तारहाराः ।
स्कन्धान्तात्केशपाशोच्छुरितसुमनसः सम्यगाकुञ्च्य बद्ध्वा
चेलान्तांस्तास्तदानीं झटिति युवतयः कर्णधारीबभूवुः ॥ ३ ॥

जल्पन्त्यो नृहरेः कथाः प्रतिमुहुस्सम्पार्श्वयन्त्यो नदीं
खेलन्त्योऽच्युतभावनार्थितमिथस्संश्लेषणादिक्रियाः ।

पश्यन्त्योऽम्बुनि तत्र तत्र शतशः पद्मोत्पलानां वनीः
गायन्त्यो मधुरं रयेण तरणिं सञ्चोदयन्ति स्म ताः ॥ ४ ॥

चलापाङ्गे किञ्चित् प्रसरति विलीना झषगणाः
सितेऽप्याविर्भूते विकसितमभूदुत्पलवनम् ।
उपक्रान्ते गीते सपदि मधुपा दूरमगमन्
पुरा वक्त्रे स्त्रीणां सरयमपतन् ये च विधृते ॥ ५ ॥

दण्डक्षेपवलद्भुजाग्रवलयप्रत्युप्तरत्नप्रभा-
जालालातनिपातशङ्कितरटद्धावज्जलेभच्छपाः ।
एतद्धोरतरार्भटीशमिततत्तत्क्षुद्रयादोगण-
व्यापारां समचोदयन् पयसि तां नौकामभीकस्त्रियः ॥ ६ ॥

स्वेदक्लिन्नमृगीमदश्लथकचप्रभ्रंशिपुष्पोत्कर-
व्यालोलालकतारहारमसकृद्विस्रस्तरुद्धांशुकम् ।
हृष्यत्कङ्कणनिक्वणं स्तनतटप्रभ्रष्टचेलाञ्चलं
नौकायाः परिवर्तनेन तदभूत्सर्वं वधूमण्डलम् ॥ ७ ॥

तत्रामोदहिमोदमिश्रितघुमत्पाटीरपङ्कोत्तमैः
अन्योन्यं परिदिग्धबाहुलतिकाः सद्रत्नभूषोज्ज्वलाः ।
बिभ्राणास्सुममालिकास्सतिलका धूपैर्वरैर्धूपिताः
सामोदं कृतवीटिका युवतयस्स्वर्गं वृथा मेनिरे ॥ ८ ॥

तथारमत सर्वात्मा
तत्र स्त्रीषु हरिर्यथा ।
मय्येव रमते शौरि-
रिति मन्येत तज्जनः ॥ ९ ॥

गृह्णाति क्वचिदञ्चले क्वचिदलंकर्षत्यसौ कुन्तले
फाले न्यस्यति चित्रकं किरति च प्रालेयतोयं स्तने ।
वक्त्रे चुम्बति कुत्रचित् स्पृशति च काप्यङ्गुलीभिः कटिं
तत्रैवं नृहरिर्विधूसमुदये पूर्णत्वमाशंसति ॥ १० ॥

लावण्यं क्वचिदीक्षतेऽधरसुधामाकाङ्क्षते च क्वचित्
वक्षोजेषु नखक्षतिं वितनुते ज्ञात्वाशयं भाषते ।
एकान्तं भजते क्वचित्क्षणमसौ सीताङ्क एव क्वचित्
सर्वासामपि योषितां स रमते सान्निध्य एव प्रभुः ॥ ११ ॥

क्रीडन्नाभीरकन्याभि-
र्भानुकन्याम्भसि प्रभुः ।
विनोदमकरोदेवं
वाक्केलिधृतकौतुकः ॥ १२ ॥

वेण्यां कर्षति कोऽयमत्र शठ मे हा चुम्बसि त्वं मुखं
शैवालं ननु कर्षितं न किमयि स्वाघ्रातमम्भोरुहम् ।

हा मां वञ्चयसि प्रमत्त न तथा हत्वा स्तनौ ते शपे
प्रज्ञाते क्व तवोरुमूलमविशद्धा हन्त किं कुर्महे ॥ १३ ॥

हा रे क्रूर कुचं मम स्पृशसि किं बालेन किं कुड्मलं
चक्षुस्ते क्व तवांशुकं क्व नु गतं वेणीसमाबन्धने ।
स्रस्तं किञ्चिदतो नु तद्भ्रममगाद्वाचाटयुक्तं न ते
सत्यं ताडयते न मामिति गिरा कृष्णस्य स्म विस्मिता ॥१४॥

पश्यावोऽब्जवनं तथैव सखि हा किं वा पतन्नेत्रयोः
मुग्धे सारसकेसरः किमधरे दष्टं सखीन्दिन्दिरैः ।
चेलं कर्षति कोऽस्ति भीरु पवनः किं वापतद्वक्षसी-
त्याक्लिष्टस्समिया कयापि सुदृढं कृष्णोऽत्र योषाकृतिः ॥१५॥

इति तत्र हरिं स्त्रीषु
रममाणं यथामतम् ।
अतोषयन् विरिञ्च्याद्याः
सौवर्णसुमवृष्टिभिः ॥ १६ ॥

बद्धास्तनाञ्चलमलं स्मितपूर्णगण्डाः
कृत्वा कचेषु कुसुमानि गृहीतदण्डाः ।
पश्यन्त्य एव नृहरिं तदपत्यलीलां
गायन्त्य एव तरणिं समचोदयंस्ताः ॥ १७ ॥

एवमावर्तयन्तीनां
नावमाभीरयोषिताम् ।
आनन्दातिशयेनैव-
माविरासन् मिथोगिरः ॥ १८ ॥

अहो नस्सौभाग्यं वसति सविधेऽत्रैव नृहरिः
परीरम्भारम्भे भजति भुजयोरन्तरमपि ।
यथा कामं कामं दिशति मधुरां नोऽधरसुधां
गिरां दूरे शौरेर्जयति रतिताद्दग्विधसुखम् ॥ १९ ॥

अहो नस्तारुण्यं स्मरपितुरधीनं विजयते
तथेदं लावण्यं वसनमणिभूषोज्ज्वलमपि ।
यदेतन्नैपुण्यं रतिषु बत न श्श्लाघ्यमभवन्
मुरारेः कारुण्यात्तदिह सफलं जातमखिलम् ॥ २० ॥

एवमाभीरभीरूणा-
माकर्ण्य मधुरा गिरः ।
स्वराडपि सुखी वै तै-
रब्रवीत्तदिदं हरिः । ॥ २१ ॥

अहो मन्दं मन्दं मलयमरुदावाति शिशिरं
पिकव्रातश्चूतानटति रटति स्वैरमसकृत् ।

इहेदानीं धन्यस्स्फुटमनुभवत्येष तदिदं
वधूनां सौन्दर्यं शतमखमुखानामसुलभम् ॥ २२ ॥

एवं प्रशस्य बहुधा नृहरिस्स्वभाग्यं
भाग्यं श्रियोऽपि स वधूहृदयं विदित्सुः ।
दण्डान् विनिक्षिपत भो करभोपमोर्वः
पश्चादितः परमिति प्रहसञ्जगाद ॥ २३ ॥

आकर्ण्य वचनं तस्य
स्मितपूर्वमुदीरितम् ।
मत्वा तत्कुटिलं योषा
रोषादिदमथाब्रुवन् ॥ २४ ॥

हा किं जल्पसि साधु साधु विदितं चेतस्त्वदीयं हरे
बालं सान्त्वयसि क्षतिं विरचयन् गात्रेषु डोलादिभिः ।
का वा त्वामयि विश्वसेदलमलं वाचानया तां दृढं
बध्द्वा निक्षिप दूरतो न चलति ह्यस्मासु युक्तिस्तव ॥ २५ ॥

दृष्ट्वा तवाधरसुधारुचिरं मुखाब्जं
श्रुत्वा च ते श्रुतिमधूनि वचांसि मोहात् ।
आयात्वनेन क उपाधिरिति स्थितास्स्मः
प्रागेव नैवमिति नो विदितं मतं ते ॥ २६ ॥

एवं वचोभिर्बहुधा
क्रूरैस्तास्तमवाकिरन् ।
तीक्ष्णधारैरिवाम्भोभि-
स्सुमेरुं मेघपङ्क्तयः ॥ २७ ॥

त्रिदशविभुसभायां पुण्ययोषित्प्रपञ्च-
स्त्रिपुरहरसभायां प्रेतभूतप्रपञ्चः ।
जलजभवसभायां मौनिभिक्षुप्रपञ्च-
स्त्विति नृहरिसभायामूचुराभीरकन्याः ॥ २८ ॥

तत्रानुलेपनमणीमयभूषणस्र-
क्ताम्बूलदिव्यवसनैस्समलङ्कृतास्ताः ।
कान्तास्स्वरोप्यतरणौ हरिणा विरेजुः
कामं स्वकीयसरणौ शशिनेव ताराः ॥ २९ ॥

आश्लिष्यन्त्यः प्रतितटि मिथो भावयन्त्योऽब्जनाभं
निध्यायन्त्यस्सरसमनघं चेष्टयन्त्योऽङ्गकानि ।
उद्गायन्त्यो मुहुरपि कलं द्योतयन्त्योऽनुरागं
ताः क्रीडन्त्यस्सुसुखमसुखं विस्मरन्ति स्म मुग्धाः ॥ ३० ॥

सौन्दर्यातिशयेनाथ
भुवि वस्त्वन्तरं स्त्रियः ।

स्वसमानमनालोक्य
सगर्वमिदमब्रुवन् ॥ ३१ ॥

विधिहरहरयो वा शक्रमुख्यास्सुरा वा
कचकुचवदनानां वीक्ष्य नो रूपलक्ष्मीम् ।
विगलितधृतिसाराः किं भजेयुर्न मोहं
विधुतमहितभावाः किं भवेयुर्न नम्राः ॥ ३२ ॥

ब्रह्मापि स्वसुतां समीक्ष्य सहसा मोहाटवीं प्राविश-
द्वृन्दां वीक्ष्य पुरा पुराणपुरुषोऽप्यङ्गीचकार भ्रमम् ।
सर्वज्ञोऽपि स दारुकावनवधूमोहान्धकारेऽपत-
त्पाशं शौरिरिहापि नस्समगमद्भाग्यं वधूनामहो ॥ ३३ ॥

आनन्दातिशयेनैव-
मानन्दनिधिसन्निधौ ।
नार्यो मदवशादूचु-
र्विवशास्तदिदं पुनः ॥ ३४ ॥

जानीते रतिमञ्जसानुभवितुं मिथ्यागिरं प्रब्रुव-
ञ्जानीते स्फुटमेव मोहयितुमप्यालोकिते स्त्रीजने ।
ञ्जानीते किल पृष्ठतोऽन्वटितुमप्यालोक्य नस्सौभग-
ञ्जानीते कथमेष चालयितुमत्रैतां स नौकां शिशुः ॥ ३५ ॥

तत्रैवं रममाणानां
तासामानन्दमद्भुतम् ।
नालं स्मर्तुमपि ब्रह्मा
वक्तुमन्ये कियद्विधाः ॥ ३६ ॥

इति श्रीमत्कविवेङ्कटसूरिणः कृतौ

## नौकाचरित्रे

द्वितीयस्सर्गः ॥

---

॥ श्रीः ॥

# अथ श्रीमत्कविवेङ्कटसूरिणः कृतौ

## नौकाचरित्रे

### तृतीयस्सर्गः ॥



श्रुत्वाथ वचनं तासां
सौन्दर्यमदगर्वितम् ।
चिन्तयांमास निमिषं
स्वान्त एव तदा हरिः ॥ १ ॥

उन्मस्तकं मदमसौ तरुणीजनाना-
न्देवो न तारयितुमत्र विचित्रशक्तिः ।
मेनेऽतिवातघनगर्जितभीकरोरु-
वर्षान्धकारसमुदञ्चितरन्ध्रतोयैः ॥ २ ॥

मेने यथा हृदि वधूनिवहोरुगर्व-
निर्वापणाय निगमान्तविचारवेद्यः ।
तेने तथैव सहसा सुरमं निकाय-
स्सञ्चोदितो भगवता हृदि संस्थितेन ॥ ३ ॥

शान्तक्षेपणिताण्डवं सरभसव्यालीनगानारवं
शङ्कातङ्किमनोऽङ्गनासमुदयं सच्छिद्रनौकातलम् ।
जज्ञे दुस्सहदुर्निवारतरणिस्वच्छन्दचारं तदा
दुर्वाताम्बुदघोषभीषणमहद्वर्षं नभोमण्डलात् ॥ ४ ॥

तदा नौकातलच्छिद्रा-
दागच्छति जलेऽङ्गनाः ।
विमला विह्वला भूत्वा
मिथो वचनमब्रुवन् ॥ ५ ॥

गर्जन्त्यभ्रगणाः पतन्ति च शिला रुन्धन्ति धारा दिशो
वाताश्चैव तदुद्भवास्तत इतः कर्षन्ति नौकामिमाः ।
भूत्वा रन्ध्रमिहापि हन्त तरणेरन्तः प्रविष्टं पयः
किं कुर्मः किमनाय्यसौ नृपसुतः का वा भवेन्नो गतिः ॥६॥

प्रागेवेदमनर्थहेतुकमिति व्यक्तं मयोक्तं स्त्रिय-
श्श्रोत्रे किं न्यपतत्तदोषदपि वस्सत्यं बलीयान् विधिः
बह्वीनां स्थितिमेकतो मृगदृशामाहुर्युगान्ते बुधा
गर्वे चैवमभूदितः परमियं भानोस्सुता नो गतिः ॥ ७ ॥

एतन्महार्हगुणदूषणदोषतो वा
कस्याश्चिदस्य युवतेर्द्रुतशापतो वा ।

अस्माकमेव गृहनिर्गमलम्पतो वा
सम्भावितं तदिदमस्य शमं न विद्म ॥ ८ ॥

कृत्यं रहस्यमिह नः प्रथितं यदि स्या-
त्तद्वल्लभैरपि वियोजयितुं न किं स्यात् ।
आनीत एष न विमृश्य वधूभिरत्र
हा नोऽद्य चञ्चलमधैर्यमुपैति चेतः ॥ ९ ॥

इति चिन्तां समासाद्य
त्रातारमनवेक्ष्य च ।
कालिन्दीं प्रार्थयामासु-
रेवं क्षेमाय तास्स्त्रियः ॥ १० ॥

कालिन्दि तेऽञ्जलिरयं रचितोऽङ्गनाभि-
स्सम्पूज्य पुष्पनिकरैर्बहुधातिभक्त्या ।
कामेन वामगतिना खलु वञ्चितास्स्म-
स्त्रायस्व नस्तव गृहाण विभूषणानि ॥ ११ ॥

अस्माभिरेकमिह चिन्तितमन्यदेव
देवेन किं किमिह निश्चितमस्ति वा नः ।
फाले यथैव लिखितं विधिना तथास्तु
बालं तटं गमय भो यमुने नमस्ते ॥ १२ ॥

स्त्रीभिः कृतं किमपि तत्प्रलयाय नूनं
आसीद्विनोद इह नोऽयमनर्थहेतुः ।
बुद्ध्या हतास्स्म कथनेन किमद्य देवि
त्रायस्व बालकमिमं स हि जीवितं नः ॥ १३ ॥

एवं तां प्रार्थयन्तीस्ता
हर्यर्थे हरिणीदृशः ।
दृष्ट्वा विधिमुखा देवा
एवमन्योन्यमब्रुवन् ॥ १४ ॥

अपारसंसारसमुद्रतश्श्रिता-
न्प्रतारयत्येष निमेषतः प्रभुः ।
स्त्रियो नदीं तस्य कृतेऽल्पजीवनेऽ-
प्यहो मुहुस्तां प्रणमन्ति सादरम् ॥ १५ ॥

अथ तत्प्रार्थनायां च
व्यर्थायां व्रजयोषितः ।
शौरेः पूर्वस्थितिं स्मृत्वा
विलप्तुमुपचक्रमुः ॥ १६ ॥

क्रीडन्तं पुरि शैशवेन तरुणीतुङ्गस्तने निर्मल-
स्त्रद्यन्तं प्रतिगेहमन्ययुवतीस्सायन्दिवं सद्धियम् ।

सुख्यन्तं सुदतीजनैस्सह तरुच्छायासु धीरैर्नुत
म्बालं तं समनीनयन्निह सरिन्मध्यं स्त्रियो हा कथम् ॥१७॥

दुर्बुद्ध्यैव हि सङ्गतोऽयमतुलोऽनर्घोऽत्र नो योषिता-
मानीतोऽयमिहाप्सु किं युवतिभिस्तोयेऽतिभीरुर्हरिः ।
कालिन्दीं सहसा प्रतार्य निबिडे वर्षान्धकारेऽप्यमुं
सीदन्तं पृथुकं पुनर्गमयितुं मात्रन्तिकं हा कथम् ॥१८॥

अथैवं विलपन्तीना-
न्तासामाभीरयोषिताम् ।
सुभीतवदिमां वाच-
म्प्रोवाच मधुसूदनः ॥ १९ ॥

अह बदरनिमित्तं गृह्य (?) मुक्ताफलानि
प्रविशति मयि वीथीं नर्मगोष्ठ्या स्त्रियां वः ।
पयसि मिहिरसूनो वञ्चितोऽहं विनीतो
हितमिति युवतीनां विश्वसेत्को नु वाचः ॥ २० ॥

वैद्यस्येव वचश्शौरे-
रधैर्यकरमङ्गनाः ।
श्रुत्वा तत्सुभृशं भीताः
कान्तास्तदिदमब्रुवन् ॥ २१ ॥

स्थितमयि पुरि दारान् वञ्चयित्वात्र शौरि-
न्द्रुतमनुनयवाक्यैरानयन्तीभिराभिः ।
इह मधु मधुकीटान् वञ्चयित्वा विसृष्टं
स्फुटमुरुतरुशाखाबद्धमानीय भूमौ ॥ २२ ॥

हा त्वन्निमित्तमयि नस्तनुपोषणं च
हा त्वत्कृते गुरुजनस्य विमाननं च ।
स्नानादिकर्मसु सदा स्मरणं च ते नः
किन्न्वेतदर्थमहहा नृहरे सुजातम् ॥ २३ ॥

आतृप्ति तेऽङ्घ्रिकमलद्वयसेवनेच्छा
देहान् त्वदर्थमुपकल्पयितुं स्थितास्था ।
सौख्यं त्वितः परमिति त्वयि नो दुराशा
किन्न्वेतदर्थमहहा नृहरे सुजातम् ॥ २४ ॥

नस्त्वां श्रुतिस्मृतिपुराणनुतं प्रपत्ति-
स्त्वन्नाम तारकमिति त्वदुपासनं च ।
त्वद्बाल्यकृत्यसहनं च कथंचिदेव
किन्न्वेतदर्थमहहा नृहरे सुजातम् ॥ २५ ॥

प्राग्जन्मकोटिषु भृतं सुमहत्तपश्च
प्राप्तः पुराजनुषि राघवतो वरश्च ।

एतन्निमित्तमयि किं त्वयि तद्द्वयं नः
त्यक्तुं वयः पयसि हा नृहरे सुजातम् ॥ २६ ॥

भृशं विलपतीरेव-
माभीरयुवतीरसौ ।
समीक्ष्य जीवनोपाय-
मिदमाह तथा हरिः ॥ २७ ॥

कालो न शोचितुमयं भजताशु धैर्य-
ङ्कामस्य हन्तुरपि कर्मफलं ह्यलङ्घ्यम् ।
उन्मुच्य कञ्चुकचयान्द्रुतमेव नौका-
रन्ध्रे विनिक्षिपत साधु यथाम्बु नायात् ॥ २८ ॥

श्रुत्वा तदा यदुवरस्य वचोऽमृतानि
मत्वा हितानि सहसा व्रजसारसाक्ष्यः ।
बद्ध्वाञ्चलानि सुदृढं नवकञ्चुकानि
मुक्त्वा मुखे निदधिरे विवरस्य तस्याः ॥ २९ ॥

इति श्रीमत्कविवेङ्कटसूरिणः कृतौ

## नौकाचरित्रे

तृतीयस्सर्गः ॥

---

# अथ श्रीमत्कविवेङ्कटसूरिणः कृतौ

# नौकाचरित्रे

## चतुर्थस्सर्गः ॥



तद्रत्नचित्रितनवीनखलोनजातं

क्षिप्तं मुखेऽतिविपुलस्य बिलस्य तस्य ।

नीतं बहिस्सपदि तुङ्गतरङ्गसङ्घै-

स्तास्तत्समीक्ष्य सहसैव तथैवमूचुः ॥ १ ॥

हा तानि कञ्चुकशतानि हृतानि नीरे

वाताहतिं न सहते तनुता तनोर्नः ।

जानूपरि स्पृशति रन्ध्रसमुद्गताम्भः

का नो गतिर्वद हर पृथु ते यशस्स्यात् ॥ २ ॥

अस्मानुपायकथनेन वियोगभीरू-

स्त्रायस्व दर्शय बलं तव यत्पुरोक्तम् ।

संयोगतोऽजनि वधूभिरयं प्रयास-

स्साह्यं हरे तव कदा पि न विस्मरेम ॥ ३ ॥

जज्ञे किमेतदसुहृज्जनदृष्टिदोषा-
ज्जन्मैव नः किमथ वास्य कृते स्वदोषात् ।
न त्रायसे श्रितनृपाल भयात्किमस्मा-
न्नायाति हा तव कृपा नृहरे किमर्थम् ॥ ४ ॥

इति तासां महाबाहु-
र्निशम्य परिदेवनम् ।
इदमाह तदा शौरिः
कट्वौषधसमं वचः ॥ ५ ॥

नायं भवत्यवसरः परिदेवनस्य
सायं भवेज्झटिति पश्यत कार्यशेषम् ।
स्वीयं नवांशुकचयं सहसा विमुच्य
देयं मुखाय विवरस्य वधूभिरस्य ॥ ६ ॥

श्रुत्वा हरेरिदमधीरदृशोऽन्तरङ्गे
गत्वा नवं परिभवं व्यथया ह्रिया च ।
भूत्वा परं विमनसस्त्वनितम्बिनीत्व-
मुक्त्वा धिगस्त्विति पुनर्गिरमेवमूचुः ॥ ७ ॥

कार्यं कथं तदिदमाः किमुवाच शौरि-
रस्मासु मानधनता न हि किं स्त्रियश्चेत् ।

हा किं रहस्यमिह जीवितमस्ति चेन्नः
कान्ताः पुरे निजधनं परिपालयामः ॥ ८ ॥

हा कृष्ण किं वदसि वञ्चनया तत्रालं
कस्याश्चिदप्यनघमापुरतो वदैवम् ।
माभूदिहापदि तदेतदसाधुमौर्ख्यं
गोप्यो विमृश्य कुरुताश्वियमात्महत्या ॥ ९ ॥

हा कृष्ण शक्नुयुरिमाः किमिहापि नग्नै-
स्स्थातुं नवैरवयवैर्भुवि तद्यशो वा ।
हा हन्त मद्वचनमद्य निशम्य मुग्धा
मां प्रापयिष्यथ तटं किमितो न जाने ॥ १० ॥

किं पाप्मनां फलमिदं नृहरे वधूनां
किं नो ललाटलिपिरेवमिति स्थिता वा ।
वादाय किं प्रणय एष निसर्गतश्चे—
द्वामाः कदापि भुवि विश्वसितुं न योग्याः ॥ ११ ॥

एवं निशम्य वचनं
हरेरक्लिष्टकर्मणः ।
चिन्तयामासुरबला
मिथः कर्तव्यतां प्रति ॥ १२ ॥

समस्तजगदाधार-
स्सर्ववेदार्थनिश्चयः ।
केन वा त्रायते देवः
पथा सर्वं समीक्ष्यताम् ॥ १३ ॥

निश्चित्य सत्यमिति तस्य वचस्स्त्रियस्ताः
कृष्णस्य तत्र शनकैस्स्वदुकूलजातम्।
उन्मुच्य सत्रपमधो विवरान्तरेऽस्मि-
न्निक्षिप्य तस्थुरथ तत्सरिदाजहार ॥ १४ ॥

पश्येयुरित्यथ भृशं प्रतिपद्य लज्जां
सङ्कुच्य गात्रमखिलं विनताननाब्जाः ।
आच्छादनाय कुचयोः करयोर्युगं स्वं
नाभूदिति स्वहृदि दैवमदूषयंस्ताः ॥ १५ ॥

तासां गलद्वसनशैवलबन्धखिद्य-
द्वक्षोजकुड्मलतनूलतिकाननाब्जैः ।
नौकासरोऽम्बुभरितं स्फुटमन्तिकस्थ-
तत्कृष्णजीवनदतां प्रकटीचकार ॥ १६ ॥

वीतेषु तेषु वसनेषु विवर्धितेषु
नीरेषु रन्ध्रमुखतस्सहसा पतत्सु ।

निक्षिप्य वक्षसि हरिं प्रसमीक्ष्य तस्य
रूपं सगद्गदमिदं पुनरब्रुवंस्ताः ॥ १८ ॥

एवं ललाटलिखितं यदि नो विधात्रा
तस्यान्यथाद्य न भवेदिति ते वचोभिः ।
नग्नास्स्म काममिदमेव हरेऽवशिष्टं
हा कष्टमंशुकचयः क्व न दृश्यते हि ॥ १८ ॥

एवं विलप्य करुणं हृदि पूर्वपुण्यान्
मत्वाथ नश्वरमितीदृशसर्वभाग्यम् ।
सत्कृष्णपादसरसोरुहमाप्तुकामा
वामा अपि स्फुटतरं मिथ एवमूचुः ॥ १९ ॥

पश्यामो न कमप्युपायमिह यस्त्रातुं स्त्रियो नो भवे-
दाकण्ठं समभूज्जलं न सहते भारन्त्वितो नौर्ध्रुवम् ।
नामैवास्य हरेरजन्यवदत ध्यायन्त्य एवासकृ-
द्भक्त्या तच्चरणौ स हि श्रितविभुर्दद्यात्सुखं नो हरिः ॥२०॥

नीतं कञ्चुकमंशुकं च विगतो मानः क्व नो जीवितं
नौका मज्जति मज्जतीह हरिरप्यद्याम्बु संवर्धितम् ।
भो ब्रह्मेश मुकुन्द माधव हरे नस्सद्गतिं प्रापये-
त्याक्रोशद्व्रजवल्लवीकलकलैर्हृष्टस्तदाभूद्धरिः ॥ २१ ॥

सर्वाधारस्सकलगुणधिर्निर्गुणो निर्विकार-
स्सर्वात्मासौ सकलविभवोऽप्यादिमध्यान्तशून्यः ।
साक्षीरूपस्सकलनिगमोत्तंसको मोहनाङ्ग-
स्साक्षादासीत्तमथ महिलाः प्रार्थयामासुरेवम् ॥ २२ ॥

इदं सर्वं सत्यं न भवति जगद्भोगविषयः
पदं ते दिव्यं नः प्रदिश परमं श्रीश नृहरे ।
यदेतद्ब्रह्मेन्द्रप्रमुखविबुधैस्सेवितमलं
शुकव्यासाक्रूरप्रभृतिविनुतं वेदविदितम् ॥ २३ ॥

आकर्ण्य नीरजदृशां भृशमर्थनां ता-
मालोक्य तादृशदशामतिदुस्सहां च ।
क्रव्यादनीरदमरुत्कृतदीनरक्षः
कृष्णस्तदा हितमिदं कृपया चचक्षे ॥ २४ ॥

मामेव चेतसि निधाय पिधाय नेत्रे
पाणिद्वयेन सहसैव निरुद्धबाष्पाः ।
भक्त्या क्षणं भजत चेद्भवदिष्टदैवं
दद्यात्सुखं युवतयः कुरुतैवमाशु ॥ २५ ॥

वैद्यस्येव गदार्दिता धनवतो निस्स्वा यथा सेवका-
गर्भिण्यश्च यथा प्रसूतिसमये स्वे सूतिकायास्तथा ।

भक्त्या तत्र वचो निशम्य नृहरेराच्छाद्य हस्तैस्स्त्रिय-
स्स्वान्यक्षीणि भजन्त्य एव हृदि तं प्रापुस्स्थितिं पौर्विकाम् ।
न ध्वान्तं न हि गर्जितं न च मरुद्वर्षं न चाम्भोधरा
नौकायां न हि कुत्रचिल्लवजलं नालोकि रन्ध्रं क्व वा ।
दृष्टा सापि निजस्थले तरलतामुत्सृज्य तत्र स्त्रिय-
श्चेलान्यन्तिक एव कञ्चुकयुतान्यालोक्य हर्षं गताः ॥

खक्षिभ्रु स्मितमञ्जु खेलदलकं फालस्फुरच्चित्रकं
चञ्चत्कुण्डलरत्नदीधितिलसद्गण्डस्थलीशोभितम् ।
दृष्ट्वा मन्मथमन्मथस्य नृहरेरास्यं तदिन्दूज्ज्वलं
मुग्धास्तत्र पुरानुभूतमसुखं विस्मृत्य हृष्टा जगुः ॥ २८ ॥

दृष्ट्वा तं निजरूपनिर्जितमनोजन्मानमब्जाननं
मानाथं मृदुभाषिणं मुरहरं स्निग्धावलोकं हरिम् ।
क्रीडन्तं सततं निकुञ्जसदने हृत्कञ्जमध्ये सतां
त्रातारं वरकुञ्जरस्य नितरामालिङ्ग्य हृष्टास्स्त्रियः ॥ २९ ॥

गन्धान् हिमोदकलितान् घनसारमिश्रान्
भूवल्लभाय ददुरम्बुजचारुनेत्र्यः ।
कस्तूरिकातिलकमप्यलिकेऽस्य चक्रु-
श्शीतांशुवंशतिलकस्य तदा तरुण्यः ॥ ३० ॥

दिव्यैस्सुवर्णवसनैर्मणिभूषणैश्च
पुष्पादिभिर्मदनरूपमपूजयंस्ताः ।
सर्वं निवेद्य निजभोगसुखं तवेति
नीराजनं च निगमावसथस्य चक्रुः ॥ ३१ ॥

तस्योपदां समुपकल्प्य तदा तरुण्य-
स्तारुण्यमेव तरुणस्य मुदा स्वकीयम् ।
चक्रुः प्रणाममपि मानस एव मुग्धाः
भक्त्यान्विता मुरहरस्य सहस्रकृत्वः ॥ ३२ ॥

एवं हरिं हरिणलोलविलोचनास्ता-
स्संपूज्य तत्र सुभृशं विविधोपचारैः ।
आनन्दमप्रतुलं हृदि योगभाज-
स्सन्दर्शनाद्भगवतोऽनुभवन्ति यं वै ॥ ३३ ॥

ताराणामिव चन्द्रमा दिविषदां मध्ये यथैषां विभु—
र्मुक्तानामिव पद्मरागतरलो यद्वद्दशानां द्विपः ।
शौरिस्तद्वदभात्तदा मृगदृशां मध्ये सुराः प्रेक्ष्य तं
सम्पूज्यापि सुमैस्ततो निरगमंस्तद्वीक्ष्य हृष्टास्स्त्रियः ॥ ३४ ॥

ततोऽवरुह्य तरणेस्तरुणीगणास्ते
जग्मुस्सहैव हरिणाथ पुरं स्वकीयम् ।

सानन्दमध्वनि निजोत्सवसम्भ्रमेण
सार्थीकृतेन्द्रमुखवर्त्यनिमेषभावाः ॥ ३५ ॥

गन्धेन मूर्छति दिशो दश दिव्यधूपे
पुष्पाणि वर्षति नभस्स्थितदेवसङ्घे ।
कान्त्या प्रसर्पति दिशः करदीपिकौघे
गच्छन् परां पथि मुदं स वधूजनोऽगात् ॥ ३६ ॥

दृप्यन्नवांशुकचयैर्वरकञ्चुकैश्च
पादाङ्गुलीक्वणिततन्नवभूषणैश्च ।
हस्ताङ्गुलिस्फुरितरत्नमयोर्मिकाभि-
र्गच्छन् परां पथि मुदं स वधूजनोऽगात् ॥ ३७ ॥

गण्डस्थलीस्फुरितकर्णविभूषणैश्च
वक्षस्स्थलीचलितभासुरतारहारैः ।
हस्ताङ्घ्रिनिक्वणितकङ्कणनूपुराद्यै-
र्गच्छत् परां पथि मुदं स वधूजनोऽगात् ॥ ३८ ॥

गायन् हरिं दिवि किरन् पटवासपांसून्
प्रोक्षन्मिथस्स्तनतटीषु हिमोदबिन्दून् ।
विष्वग्दिशो धवलयन् स्मितचन्द्रिकाभि-
र्गच्छन् परां पथि मुदं स वधूजनोऽगात् ॥ ३९ ॥

संवीजयन् करचलव्यजनानिलैस्स्वै-
रालिङ्गयन् मुहुरुरोजयुगैर्भुजैश्च ।
तत्रोद्वहन् सरसमच्युतमक्षियुग्मे
गच्छन् परां पथि मुदं स वधूजनोऽगात् ॥ ४० ॥

धम्मिल्लविच्छुरितदिव्यसुमोदिताभि-
रुत्कीर्यमाणपटवाससमेधिताभिः ।
स्वैरं घमघ्घमदनर्घसुवासनाभि-
र्गच्छन् परां पथि मुदं स वधूजनोऽगात् ॥ ४१ ॥

एवं व्रजन् व्रजवधूनिवहस्तदानीं
हर्षेण तं सह नयन् मधुकैटभारिम् ।
मध्येपुरं कमपि नैजविहारगेहं
प्रापय्य तत्र तदिदं शुभमाचचक्षे ॥ ४२ ॥

मङ्गलं महानुभाव देवदेव मङ्गलं
मङ्गलं श्रितास्मदार्तिभञ्जनाज मङ्गलम् ।
मङ्गलं परात्परेन्दिरासहाय मङ्गलं
मङ्गलं मुकुन्द कृष्ण ते सदाऽस्तु मङ्गलम् ॥ ४३ ॥

## फलश्रुतिः ॥

एतद्वेङ्कटसूरिणा विरचितं पापौघविध्वंसनं
पुण्यं पुण्यकृतां हितं सुमहितं नौकाचरित्रं हरेः ।
नित्यं यश्शृणुयात् पठेच्च स भवेद्भक्त्या वशिष्ठो बलात्
तेनैवाशु सुयोजितोऽत्र परतश्श्रेयोऽमृताभ्यां सुधीः ॥ ४४

इति श्रीमत्कविवेङ्कटसूरिणः कृतौ

## नौकाचरित्रे

चतुर्थस्सर्गः ॥

॥ समाप्तश्चायं ग्रन्थः ॥

---

*Copies can be had of :—*
**The Saurashtra Sabha,**
*Madura.*
&
**The Indian Music Publishing House,**
*4, Bunder Street, Madras.*

